॥ श्रीः ॥

# दूतवाक्यम्

(चम्पूप्रबन्धः)

मेल्पत्तूर् नारायणभट्टतिरि प्रणीतम् ।

प्रसाधकः

म. हरिहरशास्त्री

प्रकाशकः

आर्. टी. पिल्लै ।

---

अनन्तशयनस्थ श्रीधरमुद्रालये मुद्रितम् ।

१९३६.



मूल्यं ५ आण

॥ श्रीः ॥

# दूतवाक्यम्

---

साकं राजा सगर्भ्यैः समयजलनिधिं
दुस्तरं साधु तीर्त्वा
निर्मुक्तो वक्त्ररन्ध्राद्विधुरिव तमसो
भासमानो नितान्तं ।
पाणिं पार्थात्मजेनाद्भुतभुजमहसा
ग्राहयन्नुत्तरायाः
सन्तुष्यन् बन्धुवर्गैस्सह शमनसुतो
मात्स्यपुर्यां न्यवात्सीत् ॥ १ ॥

सौभद्रस्य विराटजापरिणये
वृत्ते समं पाण्डवै-
रास्थाने मिळितेषु रामशिनिभू-
पाञ्चालमात्स्यादिषु ।
स्वैरालापकथावधौ स भगवान्
दैत्यान्तकः सौहृदात्
पार्थानां करणीयशेषविषया-
मित्थं बभाषे गिरम् ॥ २ ॥

"हा! धिक्कष्टमिदं सतामपि कथं
पापीयसी हन्त! धी-
रस्मिन् धर्मसुतेऽपि कस्य रसना
दोषं विवक्षेन्मृषा।
अस्त्वेवं निजशिष्यवत्सलतया
नाऽस्य प्रतिब्रूमहे
तं दुर्योधनमेव मे धनुरिदं
वक्ता शरैरुत्तरम् ॥ ९ ॥

पुंखानामस्तु सन्धिः सुदृढमिह गुणै-
र्नो पुनर्धार्त्तराष्ट्रैः;
पार्थानां प्रेषितव्यास्समरभुवि शरा
एव शाता न दूताः।
स्नेहालिप्ता कृपाणी निपततु तरसा
तेषु नो सामवाणी;
भोक्तव्यं वाऽसुजालं ननु रणभुवि तै-
र्नार्धराज्यं कदाऽपि" ॥ १० ॥

द्रुपदः—

"कामं विग्रहसाध्य एव स रिपुः
सामैव कार्यं तथा-
प्यारंभो मृदुपूर्व एव महतां
तीक्ष्णोत्तरो नान्यथा।

अस्मद्दूतगिरा च शान्तसमरो-
द्योगेषु तेषु क्षणा-
दर्थानां सुहृदाञ्च संग्रहमितः
सांग्रामिकं कुर्महे ॥ ११ ॥

तदनुस भगवान् पञ्चरात्रप्रपञ्चितः पाञ्चालगिरं तां वाञ्छानुगुणामभिनन्दन्नितःपरमपि निजप्रयत्नप्रकाशेन माध्यस्थ्यदीक्षाभङ्गमाशङ्कमानस्तयोरेव पयोधिगम्भीरचेतसोः पाञ्चालमात्स्याधिपयोरधिरोप्य बन्धुकार्यभारं सिन्धुराजमध्यगामध्यगान्निजामेव नगरीम् ॥

नीतिज्ञो मधुरोक्तिभिः शमयितुं
विद्वेषिणामुद्यमं
पाञ्चालः स्वपुरोहितं प्रहितवान्
वेगेन नागाह्वयं ।
पूर्वामन्त्रणकर्मणा वशयितुं
साधारणान् भूपतीन्
मात्स्येन्द्रोपि दिदेश दूतनिवहान्
पार्थानुमत्या जवात् ॥ १२ ॥

प्रोत्साहिता दूतघनैर्भ्रमद्भिः
प्रत्याशमुद्गीर्णनिदेशतोयैः ।
उच्चेलुरुर्वीपतयस्तमाप्तुं
सरित्प्रवाहा इव वारिराशिम् ॥ १३ ॥

कर्णाटानर्तवंगद्रमिलनिषधकां-
बोजसौवीरभोजा-
न्ध्रारट्टावन्तिकुन्त्यश्मकमगधकलि-
ङ्गाङ्गपुण्ड्राधिनाथाः ।

अन्ये च क्षोणिपालाः क्षपितरिपुबला
मूर्धभिर्दूरनम्रै-
राज्ञां राज्ञो गृहीत्वा समदमुदचल-
न्नुत्सुका युद्धकेल्याम् ॥ १४ ॥

पार्थस्य विज्ञाय चरैः प्रवृत्तिं
विसृज्य राजन्यगणाय दूतान् ।
अर्थी स्वयं द्वारवतीमगच्छत्
सुयोधनः सोऽपि सुतो मघोनः ॥ १५ ॥

तदनु तस्मिन् द्वारभुवि निवेशितबले दूरापसृतपौरजनकोरकितकरारविन्दवृन्ददन्तुरितोभयपार्श्वेन मार्गेण समतीत्य सप्तकक्ष्यान्तराणि प्रकटितकपटस्वापस्य कुहनामानुषस्य भगवतो वासुदेवस्य वासभवनं प्रविश्य तत्र च शिरोभागनिहितमहितभद्रासनमध्यमध्यासीने मानधने सुयोधने, स धनञ्जयोऽपि निभृतमुपगम्य कृताञ्जलिस्तस्य वैकुण्ठस्य चरणोपकण्ठे कुण्ठेतरधियां वरिष्ठस्तिष्ठन्नेव प्रबोधसमयं प्रभोः प्रतिपालयामास ॥ १५ ॥

कालेतस्मिन् प्रबुद्धः किल मधुमथनो
वीक्ष्य तिष्ठन्तमग्रे
जिष्णुं व्यावृत्य किञ्चित् कुरुपतिमपि तं
रत्नपीठे निषण्णम् ।
तौ सर्वज्ञोऽप्यजानान्निव कृतकुशल-
प्रश्न एवं बभाषे
किं तादृक्कार्यमद्य स्वयमुपगमनात्
क्लेशितौ यद् भवन्तौ ॥ १६ ॥

श्रुत्वा तयोरागमनस्य हेतु
कार्यं समं कर्तुमियेष शौरिः ।
भर्तुः कुरूणां प्रथमागतस्य
दृष्टस्य च प्राक् पुरुहूतसूनोः ॥ १७ ॥

कृष्णः—

"नूनं पूर्वमुपागतः खलु भवान्
दृष्टस्तु पूर्वं मया
जिष्णुस्तत्सदृशी दशेयमिह मे
तुल्येऽत्र मित्रद्वये ।
योधानां दशकोटयस्तदिह मे
नारायणाख्यावतां
सन्त्वेकस्य, परस्य चास्मि सचिवो
युद्धे निरस्तायुधः ॥ १८ ॥

इति वादिनं मधुभेदिनमेव वृतवति कृतधियामग्रेसरे फल्गुने समुदञ्चितकौतुको नागकेतुरपि परिगृह्य तत् परमबल-मुद्धणभुजबलोद्भटानां भटानां कृतवर्मयुक्तया समस्तभुवन-विक्षोभिण्या पुनरक्षौहिण्या परिवृतः स्वमेव नगरमयासीत् ॥

निर्यातेऽथ सुयोधने निजकरे-
णालम्ब्य सख्युः करं
प्रोन्मीलन्मधुरस्मिताद्रतरया
वाचा तमूचे हरिः ।
"कार्यं किं पुनराकलय्य तरसा
योधानबाधानिमा-
नाधुन्वन्नमितानशस्त्रमायि ! मा-
मेकं वृथैवावृथाः" ॥ १९ ॥

अर्जुनः—
"जानन्नेव किमद्य मोहयसि मां
देव त्वदेकाश्रयं
किं देवैरपि सासुरैर्मम यदि
प्रत्यर्थिपक्षे भवान् ।
कामं स्यात् बहुरेक एव यदि वा
शस्त्री विशस्त्रोऽथवा
जेतुं त्रीणि जगन्त्यपि प्रभुरहं
सान्निध्यमात्रेण ते" ॥ २० ॥

ततस्स तेनार्थितमन्वमंस्त
सारथ्यमीशो जगतां त्रयाणाम् ।
समाश्रितानामवनाय कर्म
नीचैरपि स्वीक्रियते महद्भिः ॥ २१ ॥

प्रीतस्स तस्यां पुरि वासराणि
द्वित्राणि नीत्वा सह माधवेन ।
लिप्सोर्निजां भूमिमजातशत्रो-
र्ययौ सकाशं विधिनेव यत्नः ॥ २२ ॥

अक्षौहिणीनां महता भरेण
क्षोणीमशेषामपि कम्पयन्तः ।
युयुत्सवः क्ष्मापतयोऽध्यवात्सु-
र्विराटकौरव्यपुरोपकण्ठान् ॥ २३ ॥

कौन्तेयपार्श्वं महता बलेन
गच्छन् प्रहृष्टः पथि सत्क्रियाभिः ।
साह्यं प्रतिश्रुत्य सुयोधनाय
मद्राधिपो मात्स्यपुरीमयासीत् ॥ २४ ॥

स तत्र पार्थं श्रुतमार्गवृत्तं
भूत्वा नियन्ता तनयस्य पूष्णः ।
तेजो निहन्यामिति भाषितेन
सन्तोष्य कौरव्यसकाशमागात् ॥ २५ ॥

सुमहति बलषण्डे पाण्डवान् कौरवान-
 प्युपगतवति पाञ्चालेरितस्तत्पुरोधाः ।
कुरुगुरमभियातः पाण्डवानां बभाषे
 बलविभवमशेषं सन्धिवाञ्छां च चित्ते ॥२६॥

"सप्ताक्षौहिण्य एषां खलु परिमिलिताः
 सन्ति चान्याश्चतस्रो-
ऽप्यक्षौहिण्योऽनपाया नकुलतदनुजौ
 सात्यकिर्भीमसेनः ।
उद्रिक्ताः षड्रथाश्चेत् पशुहरणरणे
 दृष्टकर्मा स एक-
स्तेभ्योऽलं सव्यसाची स पुनरतिशय-
 श्चक्रिणो यत् कृपैषाम् ॥ २७ ॥

एवं स्थितेऽपि बहुबन्धुवधानुबन्धात्
 सन्धित्सवो न तु भृशं विजिघृक्षवोऽमी ।
तच्चिन्त्यतां हितमिति" प्रवदन् गतोऽसौ
 भीष्मादयः शिशमिषा श्रवणात् प्रसेदुः ॥ २८ ॥

स्नेहान्धो जन्मनान्धोऽप्यथ स कुरुपिता
 सामभिः साधयिष्यन्
पार्थानां शान्तिभाजां पुनरटविगतिं
 शीलमेषां प्रशंसन् ।

तत्त्वज्ञं नीतिविज्ञं प्रियहितनिरतं
प्राहिणोत् सञ्जयं तं
सोऽपि प्राप्याभितुष्टॺं बहुविधकुशल-
प्रश्नकारी बभाषे ॥ २९ ॥

"स्नेहाधिक्येन युष्मानुपदिशति पिता
भूतमैत्रीविचारः
शान्तिः क्षान्तिर्दया चेत्यखिलगुणगणै-
र्नित्ययुक्ता हि यूयम् ।
आकिञ्चन्ये च राज्ये स्फुटमिह तुलया
तोलिते राज्यमुच्चै-
र्न्यूनं प्राहुस्तदर्थं बहुविधदुरितं
को नु कुर्याद्विवेकी ? ॥ ३० ॥

भर्तव्यं स्वशरीरमेव, सुलभं
भोक्तुं यथेच्छं फलं,
शय्याश्चारुशिलातलानि, सरितां
तोयं च पेयं लघु ।
साध्यं विश्वमपि स्थिरेण तपसा
तद्भाग्यभाजामहो !
सम्प्रार्थ्यो वनवास एव नगरी-
वासाद्गरीयस्तरः ॥ ३१ ॥

बध्नात्येव हि यत्रयत्र ममतां
तत्तद्विषादास्पदं,
यस्त्वात्मंभरिरेव तस्य गुणिनो
राज्यं हि सर्वा मही।
तद्वो बन्धुतमस्य पुण्यसुलभ-
स्यैतस्य लक्ष्मीपते-
र्गेहे सौहृदवास एव किमुत
श्रेयान् बहूनां वधात्" ॥ ३२ ॥

ईदृग्गिरामफलतावगमात् सलज्जे
राजाज्ञयैव खलु शंसति सञ्जयेऽस्मिन्।
सर्वेषु च प्रतिविवक्षुषु पाण्डवेषु
धर्मात्मजः स्वयमुवाच वचो गभीरम् ॥ ३३ ॥

धर्मात्मजः—

"सत्यं प्रेमातिरेकादनुगदितमिदं
तेन पित्रा कुरूणां
श्रेयानप्येष मार्गो लगति न मनसि
क्षात्रदोषाकुले नः।
सौहार्दादेव पूर्वं शकुनिरकृत नः
किञ्चिदारण्यवासं
येन प्राप्तानि तानि त्रिपुरहरवरा-
दीनि भूयःफलानि ॥ ३४ ॥

जानास्येव सुयोधनस्य कुनयं
 राज्ञश्च तद्वश्यतां
धीमन्! सञ्जय! तत् किमीदृशगिरा?
 क्षत्त्रान्वयोत्था वयम्।
किन्त्वागांसि सुदुस्सहान्यपि हृदि
 क्षन्ताऽस्मि, सन्धिं वृणे,
शक्रप्रस्थपुरेऽर्धराज्यमुगहं
 प्राग्वत् प्रकल्प्येत चेत्॥ ३५॥

अथवा किमनेकजल्पितै-
 र्वयमेते यदुनायकाश्रयाः।
स वदिष्यति नः क्षमं हितं
 निगमः सद्गतिकामिनामिव"॥ ३६॥

कृष्णः—

"धीमन्! गावल्गणे! मद्वचनमिदमपि
 श्रावयान्धं नृपं तं
मन्तूयद्भिः पृथासूनुषु तदपकृतं
 ते तनूजैरकस्मात्।
काकोलाग्निप्रदानादिभिरपि शकुने-
 स्तादृशैः छद्मवृत्तै-
स्ततसर्वं वासुदेवे मयि नियतमपा-
 कारि नो पाण्डवेषु॥ ३७॥

एतत्तन्मम नापयाति हृदया-
दद्यापि, मध्येसभं
कृष्टा केशभरे विकृष्टवसना
दुश्शासनेनाकुला ।
"हा कृष्णेति" विदूरवासिनमहो !
कृष्णा भृशं प्रारुद-
द्यन्मां सञ्जय ! किं हतेष्वपि कुरु-
ष्वेतस्य शान्तिर्भवेत् ? ॥ २८ ॥

राज्ञाऽनुज्ञा वितीर्णा, समजनि मुदितो
मारुतिः सानुजन्मा
क्रुद्धो गाण्डीवधन्वा, वयमपि सुहृदो,
ब्रूहि तत्प्राप्य सर्वान् ।
पुत्रैर्दारैश्च मित्रैर्विहरत मुदितै-
रन्नपानैश्च तृप्ताः
प्रीत्या पात्रेषु चार्थान् विसृजत कुरुत
स्वानि कार्याणि चार्याः" ॥ २९॥

श्रुत्वैवं "तर्हि यास्याम्यह"मिति चलितं
सञ्जयं प्राह राजा
"प्रेमाब्धे ! तत्र सर्वान् वद कुशलमयं
पाण्डवः पृच्छतीति ।

अन्ते च ब्रूहि दुर्योधनमनयनिधिं
निर्दयं मुञ्च माऽस्मान्
ग्रामाणां पञ्चकं वा प्रदिश त्रितनुमो
जीवितं तावताऽपि" ॥ ४० ॥

व्यक्तार्थं च सुदुःश्रव मधुरम-
प्युद्वेगदं तद्वचो,
गत्वा नागपुरं व्यजिज्ञपदसौ
राज्ञेऽञ्जसा सञ्जयः ।
प्रज्ञाचक्षुरपि क्षयं निजतनू-
जानां विचिन्त्याकुलो
निर्निद्रो विदुरेण नीतिविदुरे-
णाश्वासितोऽभून्नृपः ॥ ४१ ॥

पार्थानां समरोद्योगं
श्रुत्वा सञ्जयतस्तदा ।
दातुं राज्यमयाचन्त
कुलवृद्धास्सुयोधनम् ॥ ४२ ॥

सर्वेषामात्मबन्धूनां
निरस्य वचनं हितम् ।
उदयुङ्क्त रणायैव
राज्यलुब्धस्सुयोधनः ॥ ४३ ॥

यावद्दौत्यानियुक्तसञ्जयमुखे-
नावेदितं वञ्चकः
पञ्चग्रामटिकाप्रदानमपि ही !
दुर्योधनो नाश्रृणोत् ।
तावत् पाण्डुसुताः समेत्य पुनर-
प्येकान्तबन्धुं हरिं
प्रोचुर्दौत्यविधिं चिकारयिषवः
सन्धानबद्धाशयाः ॥ ४४ ॥

धर्मपुत्रः—

"युद्धं तैरुचितं तदेव रुचितं
चित्त तथापि प्रभो !
यावद्धाधमबाधनाय सुहृदां
कार्यश्शमाय श्रमः ।
तत् कञ्जायतनेत्र ! सञ्जयमुखे-
नादिष्टमेवाखिलं
त्वं दौत्येन समेत्य वर्णय पुनः
सर्वान् कुरून् मे गुरून्" ॥ ४५ ॥

कृष्णः—

"स्थाने धर्मतनूज ! ते मतिरियं
सन्धानमेतत् पुन-
र्दुस्साधं मम भाति संभृतरणो-
द्योगेऽद्य दुर्योधने ।

वाढं शाम्यन्न वदामि संसदि रिपो-
दोंषानदोषांश्च ते
लोकास्तान् प्रविदन्तु नान्यदमुना
दौत्येन मन्ये फलम् " ॥ ४६ ॥

भीमः—

"मैवं केशव ! तत्र रूक्षवचसा
रोष्यस्त्वया कौरवः
सान्त्वैः शान्तिमुपेत्य यच्छतु स न-
स्तुच्छां महीमिच्छया ।
येन स्वं कुलमप्रणाश्य नृपतीन्
नोन्मथ्य वामभ्रुवा
मभ्रूण्यप्यनिपात्य भृत्यसमया
वृत्त्यापि वर्तामहे" ॥ ४७ ॥

कृष्णः —

"ही ही ! हासवशात् सरन्ति न गिरो
धिग्भीम ! ते भाषितं
भोः किं किं न करोषि रोषदहन-
ज्वालाकुलस्त्वं पुरा ।
अद्योरुः किमु वेपते विमृशतो
दौर्योधनीं तां गदां
किं दुश्शासनशोणितासवरसे
जातं तवारोचकम् "? ॥ ४८ ॥

इत्थं निशम्य करुणामृदुतां क्षणोत्थां
दूरं क्षिपन् झटिति मारुतभूरुदस्थात् ।
कल्पान्तरुद्र इव विष्टपमट्टहासै-
र्भिन्दन् जगर्ज च ससर्ज च वाचमेवम् ॥ ४९ ॥

भीमसेनः —

"को भीरुंकारमाक्रोशति भुवनजुषां
भीतिदं भीमसेनं?
भोस्सम्प्रत्येष हस्तभ्रामितगुरुगदा-
घट्टनैर्धार्तराष्ट्रान् ।
पिष्ट्वाहं दुष्टदुश्शासनरुधिरजलैः
क्रोधवह्निं विनेष्ये;
सन्धातुं याहि दामोदर ! सरणिमसृक्-
सिन्धवो रुन्धतां ते ॥ ५० ॥

प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्यो हेतुर्न च खलु किरीटी न च यमौ ।
जरासन्धस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा भीमस्सन्धिं विघटयति; यूयं घटयत !
[॥ ५१ ॥

युष्मच्छासनलंघनांभसि मया
मग्नेन नाम स्थितं
प्राप्तानामिह गर्हणां स्थितिमतां
मध्येऽनुजानामपि ।

क्रोधोल्लासितशोणितारुणगद-
स्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममासि न गुरु-
र्नाहं विधेयस्तव ॥ ५२ ॥

कृष्णः —

"अयथापुरभावमार्य ! ते
परिमार्ष्टुं परमेतदीरितम् ।
अभिशाम्यतु सौम्य ! ते मतिः
समरं प्राप्स्यसि पञ्चषैर्दिनैः ॥ ५३ ॥

अर्जुनः —

मन्ये गोविन्द ! सन्धौ विमुख इव भवान्
येन दुस्साधमेनं
ब्रूते, सम्यक्प्रयत्नैर्न खलु नयविदां
दुष्करं नाम लोके ।
त्वन्तु त्रैलोक्यकर्ता भवति हि भवतः
काममात्रेण सर्वं;
तद् सन्धौ साधु यत्नं कुरु करुणमति-
र्याचते ते वयस्यः" ॥ ५४ ॥

कृष्णः —

साधिष्ठोपि प्रयत्नो विधिशरणफलो
गीष्पतेरप्यवश्यं
यत्नैकव्यापृतानामिह फलविलये
शोकमात्रं विशेषः ।
यत्नः श्रेयान् मतश्चेद्वद सगरसुतैः
केन नाप्तस्तुरङ्गो
यूयं वा केन बुध्वा पुनरपि पतिताः
कैतवद्यूतपङ्के ॥ ५५ ॥

जिष्णो! जानीहि यत्नान्मम तु न भुवने
दुष्करं नाम किञ्चित्
कार्ये त्वस्मिन् करिष्ये ध्रुवमहमधुना
मानुषं यत्नमेव ।
नो चेन्निश्शेषदोषात्मनि कुरुवृषभे
यत्नतो रक्ष्यमाणे
नश्येत् सर्वंयमुर्वी कथमिह भविता
कारणं वासुदेवः ॥ ५६ ॥

संवत्सरं परिचिता तव षण्डता सा
यातापि गोग्रहविधौ पुनरागता किम् ? ।
शोचामि गाण्डिवमहं शरधी च दिव्यौ
वैकर्तनो जयति शस्त्रभृतां वरिष्ठः ॥ ५७ ॥

नकुलः—

"श्रुतमखिलपते! यत् सोदराणाञ्च वाक्यं
पुनरपि हृदयस्थं किं मया गूहनीयम्।
स्वजनवधविरागः सन्धिरागश्च भूयात्
मम हृदि कलय त्वं भीरुतां चारुतां वा" ॥५८॥

सहदेवः—

"नाहं हरे! क्षणमपि स्पृहयामि सन्धिं
कौरव्यवाक्शरसहस्रविभिन्नमर्मा।
लोकानुवृत्तिविधये गुरुभक्तये वा
दौत्यं विधेहि; भगवन्! न तु सन्दधीथाः"
॥ ५९ ॥

भगवान्ः—

"सहदेव! त्वमेवेह प्रथमः पाण्डुसूनुषु।
अयि वीर! चिरं जीव भविता ते रणोत्सवः
॥ ६० ॥

अथ तदानीं मानिनीजनमौलिरत्नभूता धृष्टद्युम्नसोदरी पञ्चपाण्डवप्रियतमा पाञ्चालराजप्रियतनया चिरतरसमधिगतदुस्सहपरिभवनिस्सहहृदया मुहुर्मुहुर्निरंकुशाङ्कुरितदुश्शासनवक्षोविक्षोभणावलोकनौत्सुक्यादिव दिवसस्य शतकृत्वः समयावसानदिवसगणनया कथमपि समापितत्रयोदशसंवत्सरा तत्समाप्तिसमयसम्पाद्यमानसम्महारोद्यमसैन्यसंभारसम्राचिर्ल-

प्रीतचेताः, तदन्तरे पुनः सन्धित्सापिशाचिकावेशविवशीभाव-विश्लथप्रकृतीनां विश्ववीराणामपि निजवल्लभानां अविज्ञात-निजपरिभवां अवज्ञातस्वप्रतिज्ञां अधरीकृतशौर्याटोपां विधुरीकृतवैरानुबन्धामतिमसृणां तादृशीं गिरं नातिदूरनिषण्णा संशृण्वती,

अगणितबहुवैरं कौरवैस्सन्धुकामं
जिगमिषुमथ कृष्णा कृष्णमाकर्ण्य खिन्ना ।
विगलितधृतिसारं प्राप्य पार्श्वं पतीनां
न्यगददुदितरोषावेशलोलां च वाणीम् ॥ ६१॥

पाञ्चाली —

"राज्ञो यत् सहजान्वितस्य रुचितं,
चित्ते च यत्ते मतं,
मित्राणामपि सम्मतं तदुचितं
सन्धानमेवाधुना ।
वेणीयं करुणानिधे! कुरुसभामध्ये
निबद्धा चिरं
स्मर्तव्या गुणकीर्तनेषु सुहृदा-
मेतावदेवार्थये" ॥ ६२ ॥

इति वदन्तीं निरन्तरोद्वान्तबाष्पांबुसन्तानारविन्दानवदनारविन्दां द्रुपदनन्दनामानन्दयन् गोविन्दो मन्दमन्दमवादीत् ।

श्रीकृष्णः—

"भद्रे! पाञ्चालि! वाञ्छा तव खलु नियतं
भाविनी; किन्तु सन्धौ
सोऽहं यत्नं सपत्नैः कुरुवरकुनय-
व्यापनायैव कुर्वे।
वेणीयं गर्भिणी ते सुतनु! कतिपयै-
र्वासरैर्या सवित्री
वेणीबन्धाननन्तान् दिशि दिशि विमत-
क्ष्माभृदन्तःपुरेषु ॥ ६३ ॥

मुग्धे! पार्षति! वक्त्रपङ्कजमिदं
बाष्पांबुधाराहिमै-
र्मा मा ग्लापय तन्वि! नन्वयमहं
दामोदरस्ते गतिः।
यत् सत्यं शृणु पञ्चषैरयि! दिनै-
र्द्रष्टासि दुष्टान् कुरून्
भूपृष्ठे पतितान्, प्रियान् पुनरमून्
पूर्णप्रतिज्ञाभरान् ॥ ६४ ॥

इत्थं सत्राशनशात्रवसपत्राकरणसत्राय दीक्षितो भूभारक्षपण-शान्तिकर्ममान्त्रिकवरो मधुरिपुः, अधरितसुधावेण्या वाण्याऽऽनन्दित-पाण्डुनन्दनो दारुकोपस्थापितं रथमारुह्य सशैनेयैर्गणेयैः सेनाभटैः सनाथीकृताग्रभागो नागपुरं गन्तुमुदयुङ्क्त; प्रस्थितं च तमुपास्थि-षत निस्तुषप्रशस्तिशालिनः समस्तलोकदुष्कृततमःस्तोमविशस्तिगभ-

स्तिमालिनस्तपस्विनः सनकादय ; हृषीकेशोऽपि तानृषीनच्युतपद-
मिच्छून् कच्चरेतरचित्तान् उचितैरुपचारैरर्चयित्वा " श्वः प्रभाते सु-
योधनसभायां सन्निपातव्यं भवद्भिः "

इत्याभाष्य विसृज्य च सत्यकापत्येन सत्रा चित्राः कथाः कुर्वन्,
उर्वीभारभूतोर्वरावरदुर्वारगर्वनिर्वापकदोर्वीर्यसर्वोर्वणिसुत्रामसुतसमास-
न्नसूतभावमहोत्सवं आत्मनानुभोक्ष्यमाणमुत्प्रेक्ष्यान्तरान्तरा सन्तुष्यन्,
आवसथेषु च वसुधासुधाशनानां आतिथ्यानुपदमाशीर्वादानाददानः,
अच्छिन्नांभस्सन्तानाः स्रवन्तीः सन्तरन्, उत्तुङ्गान्यद्रिशृङ्गाण्या-
रोहन्, पङ्कजरजःपङ्किलपङ्कजिनीपयःपवमानपोतापनीताध्वश्रमः,
समुदित्वरमहत्तरमहोज्ज्वलकायकान्तिकन्दलकलिन्दापत्यांभस्संभिन्नन-
भहासमुरस्रवन्तीजलप्रवाहावगाहनापास्तसमस्तजमतांहस्ततिः कौ-
स्तुभलक्ष्मा हस्तिनपुरोपकण्ठमहास्त, गभस्तिराडप्यस्तगिरिशिर-
स्तटीम्;

आश्नुवत निश्शेषविश्वम्भरां विहाय शनैश्शनैः काश्मीररो-
चिषो रश्मयो हारिदश्वाः शिलोच्चयशिखराणि;

एवं समायाते सायाहनि स कंसघाती घूर्णमान घुमुघुमित
निध्वानबाधिरीकृतप्रपञ्चं पाञ्चजन्यमापूरयामास ।

अनन्तरमम्बुजाक्षकम्बुराजजन्मना अनन्तान्तरालनिरन्तरीभू-
तेन तेन बोधितमाधवागमनमुदिता नितरामुदघूर्णत कुरुराज-
राजधानी ।

ततश्चापास्य कुरुकुलोत्पातकेतुं नागकेतुं, पुरस्कृत्य कृत्स्नागमनिष्णातमतिं विष्णुपदीसूनुं, कौरवपरित्राणोन्निद्राणं द्रोणं, दामोदरदर्शनसादरं विदुरं, दुर्वारबाहुस्थामानमश्वत्थामानं, मान्यानन्यांश्च सत्वराः कौरवाः सर्वतः सन्ताडितभेरीरवापूरितरोदोविवरा महत्या वाहिन्या सार्द्धं प्रीत्युत्फुल्लदृशः प्रत्युज्जग्मुर्जगन्नाथं; भक्तिप्रपन्नाः प्रणामादिभिश्चोपाचरन्;

दाशार्होऽपि तान् यथार्हमर्हयामास; तदनु तस्मात् प्रदेशात् मन्दहाससुन्दरनिजवदनारविन्दसन्दर्शनकन्दलदानन्दातिरेकमन्दीभूत–गतिभिरमीभिः परितः पौरवपुरं पुरुषोत्तमः प्राविशत्; प्रविश्य च क्षत्रा दत्तहस्तो रथादवतीर्य रथ्यावीथीमध्यतिष्ठत् ।

दिदृक्षवे पौरवधूजनाय
मुरारिमाख्यातुमिवापतन्तम् ।
पुरे पटीयान् प्रतिसौधगर्भं
बभ्राम मङ्गल्यमृदङ्गघोषः ॥ ६५ ॥

त्यक्त्वा तदा मण्डनमर्द्धक्लृप्तं
क्रियासु चान्यासु कृतानपेक्षाः ।
अभ्रेषु विद्युल्लतिका इवाशु
नार्यः पदं हर्म्यतलेषु चक्रुः ॥ ६६ ॥

नळिननयनोऽपि तासां कलिन्दनन्दिनीकल्लोलतुल्य-कुल्याभिर्विलोचनकुवलयमालाभिः सञ्छन्नमूर्तिः समतीत्य कक्ष्यासप्तकं संभृतमङ्गलोपहारानिकुरुम्बमाम्बिकासूनोः सद्म पद्मापतिः प्रतिपेदे ॥

दृष्ट्वा भीष्माम्बिकेयप्रमुखकुलगुरून्
धार्तराष्ट्रस्य गेहं
यातो देवोऽथ तेन छलनिपुणधिया
भोक्तुमामन्त्र्यमाणः ।
अन्नं सम्प्रीतिभोज्यं न च खलु मयि सं-
प्रीयसे कौरवेति
क्षत्तुर्गेहं जगाहे हरिरतिकुतुकी
भक्तभक्ते रसार्द्रे ॥ ६७ ॥

प्रविश्य विश्वार्तिहरः स देवो
दृष्ट्वा पृथां पुत्रवियोगखिन्नाम् ।
आश्वासयद् द्रक्ष्यसि निर्जितारी-
नल्पैरहोभिस्तनयांस्तवेति ॥ ६८ ॥

कृताह्निकस्तत्र कृतार्थभाव-
मासेदुषस्तल्पसमीपभाजः ।
रणैषिणां पाण्डुसुतानामुदन्तं
क्षत्तुर्वदन्नेव निशामनैषीत् ॥ ६९ ॥

कल्पप्रत्यूषकृत्यस्तदनु कुरुपतिः
सेवितस्सौबलाद्यै-
रास्थानीमात्तभूषो नृपवृषभवृतां
प्राप्य देदीप्यमानः ।
नत्वा गाङ्गेयमुख्यान् निजपितृवचसा
तुङ्गभङ्गाधिराज-
स्कन्धासङ्गी स भद्रासनमलमकरो-
दाददे चाऽथ वाचम् ॥ ७० ॥

"हे! भूपाः शृणुतादरादुपगतो
दूतः पृथाजन्मनां
मायामोहितमूढलोककलित-
प्रौढिस्स गोपालकः ।
प्रत्युत्थास्यति योऽस्य दास्यति स मे
दण्ड्यः सुवर्णान् मितान्
भारद्वादशकेन शासननिरा-
वर्तां जगत्यामिति" ॥ ७१ ॥

बालातपप्रेक्ष्यतराम्बरोय-
मानन्दिताशेषविलोचनाब्जः ।
प्राचीमिव प्रातरिनो मुरारि-
र्वैचित्रवीर्यस्य सभां विवेश ॥ ७२ ॥

आलोक्यैनं प्रतिहतदृशस्तेजसा भूमिपाला-
श्चेलुः स्थानादगणितनृपोदीर्णदण्डास्समस्ताः ।
सावष्टम्भः स च कुरुपतिर्मूढधीः पीठदेशा-
द्विभ्रष्टोऽभून्मिषति परितः क्ष्मापलक्षे विलक्षः
[ ॥ ७३ ॥

स सर्वतोभद्रमिति प्रशस्त-
मातस्थिवानासनमम्बुजाक्षः ।
निष्पन्दसभ्येक्षणलक्ष्यमूर्तिः
प्रज्ञादृशं भूमिपतिं बभाषे ॥ ७४ ॥

राजन्! कौरववंशकैरवसुधा-
सूते! पृथासूनुभि-
र्दूतोऽहं प्रहितो हिताय सुहृदां
सन्धित्सुभिस्साम्प्रतम् ।
मा भूत्त्वन्मतिरन्यथा तदपथो-
द्युक्तान् निरुद्ध्याधुना
पुत्रांस्ते स्वपुरे पुरेव कुरु तान्
पाण्डोः सुतानादृतान् ॥ ७५ ॥

वीरैरूरीकृतैस्तैरुरुभुजविभवैः-
र्मात्स्यपाञ्चालमित्रैः

पुत्रैरेभिश्च भीष्माद्यातिरथमथिता-
रातिभिर्वीतवैरैः ।
नित्यं त्वत्तोऽभिगुप्तात्त्रसति सुरपतिः
सोऽपि भेदे तु राजन् !
नष्टेष्वेतेषु शिष्टेष्वपि च कतिषुचित्
को नु लाभो भवेत्ते ॥ ७६ ॥

विज्ञापयन्ति च भवन्तमनन्तखेद-
प्रोद्भ्रान्तबाष्पभृतगद्गदरुद्धकण्ठाः ।
दूरावनम्रशिरसश्चिरसोढपीडा-
भारासहा इव नराधिप ! मन्मुखेन
[॥ ७७ ॥

बाल्ये येन विवर्धिताः कृतधिया
पुष्टाः स्वपोषं वयं
वात्सल्यादथ तासु तासु विनयं
विद्यासु च ग्राहिताः ।
वाचा तस्य तवानुभूतविपिन-
क्लेशाश्चिरादागता
भूयस्त्वत्कृपया लभेमहि गृही-
मात्मांशभूतामिति ॥ ७८ ॥

तत्सम्प्रति स्वीकुरु तान् प्रवीरां-
स्तवोज्ज्वलस्य स्थितये कुलस्य ।
तदर्थमेते च गता नरेन्द्रा
निवृत्तकृच्छ्राः प्रतियान्तु देशान् ॥ ७९ ॥

नृपस्तमाभाषत, किन्नु कुर्या-
मयं सुतो मे न वचः शृणोति ।
सान्त्वेन दाशार्ह ! निवर्तयैनं
कदध्वनः सौहृदनिघ्नचेताः ॥ ८० ॥

उक्तश्च तेनैवमथासुरारि-
र्विवृत्य वक्षो वलमानहारः ।
एकासनाद्ध्यासिनि भानुसूना-
वुपाश्रितं कौरवमाबभाषे ॥ ८१ ॥

जातस्त्वं विमले कुले शशभृत-
स्त्वामाश्रिता श्रीस्स्वयं
कर्णाद्यैः करदीकृताः क्षितिभृतः
कुप्यन्ति तुभ्यन्तु ये ।
त्वत्तो लब्धसमीहिता हि सुहृदः
पृथ्वी तवाऽऽस्ते वशे
त्वय्येवं गुणभाजनेऽप्यपनयो
लब्धास्पदोऽयं कथम् ? ॥ ८२ ॥

तत्तादृशं शृणु महत्तव वंशवृत्तं
पूरुर्ददौ नववयः पितुरात्तजैर्ण्यः ।
त्यक्त्वाश्रमं पितृमुदे तृणवद्द्वितीयं
देवव्रतोऽयमिह तिष्ठति धीरधीरः ॥ ८३ ॥

दुर्द्यूतदेवनगुरुस्तव मातुलोऽयं
कर्णस्तु दुर्नयमहार्णवकर्णधारः ।
तस्मादयुक्तमनयोरनुवर्तनं ते
पथ्यं न यो वदति भर्तुरसौ हि शत्रुः
[ ॥ ८४ ॥

सार्धं दुरन्तैः सचिवोपदेशै-
र्क्रोभं विसृज्योभयलोकशत्रुम् ।
सङ्गम्य पार्थैस्सह सौहृदेन
हतद्विषं भुङ्क्ष्व महीमशेषाम्" ॥ ८५ ॥

तावत्सुत व्याहरदाम्बिकेयः
"प्रसीद बद्धोऽयमिहाञ्जलिस्ते ।
मन्युज्वरस्यौषधमार्तबन्धो-
श्शौरेर्वचः पथ्यमिदं पिबेति" ॥ ८६ ॥

तमूचतुः शान्तनवो गुरुश्च
"क्षेमाय सन्धत्स्व युधिष्ठिरेण ।
चापेषु मात्स्यप्रमुखा रणाग्रे
न सायकान् सन्दधतां नरेन्द्राः ॥ ८७ ॥

चिराय योगं कुरुपाण्डवानां
निरीक्ष्य राजन्यगणः समेतः ।
प्रमोदजं मुञ्चतु वारि नेत्रै-
र्न शोणितं पार्थशरक्षताङ्गैः ॥ ८८ ॥

वचांसि लोकः प्रणयोचितानि
शृणोतु तेषां भवतां च हृष्टः ।
निर्घातघोरान् कुपितस्य संघे
समीरपुत्रस्य न सिंहनादान्" ॥ ८९ ॥

राधासुते हसति कल्पितहस्तताले
दुश्शासने च दृशि सूचितसान्धिदोषे ।
सम्प्रेक्ष्य मातुलमुखं प्रहसन् कुरूणा-
मीशोऽपि केशवमुवाच वचो नृशंसः ॥ ९० ॥

"आबाल्याद्ये विरोधं व्यदधत विविधं
साधुवृत्तेष्वकस्मा-
दप्यस्मास्वात्तवैरास्सदसि विनिकृता
देवने ते सुदीनाः ।

नीता मे नीतियोगादहह वनभुवं
भीममुख्यास्त्वदीयाः
प्रायोवृत्तं तदेतात्त्रिभुवनविदितं
दूत ! जानासिनोवा ॥ ९१ ॥

वृद्धौ लब्ध्वा विराटद्रुपदकुनृपती
साम्प्रतं साह्यकृत्ये
मह्यं द्रुह्यन्ति यत्ते किमिह बहुतरं
ब्रूमहे हास्यमेतत् ।
गच्छ त्वं ब्रूहि पार्थान् मयि धरणिरियं
सुस्थिरा तत् प्रदास्ये
युष्मभ्यं पुण्यलभ्यं रणभुवि निशितैः
सायकैर्नाकलोकम् ॥ ९२ ॥

भगवान् —

श्रीमन्नेष भवन्मनोरथतरुः
कर्णादिदुर्मन्त्रितै-
रुन्मीलत्कुसुमाश्रितः शकुनिना
कालेऽफलिष्यत स्वयम् ।
तद्गङ्गाधरमूर्ध्नि मग्नमुद्‌म-
ज्जिष्यन्न चेदर्जुन-
स्योच्चण्डाहितषण्डखण्डनकला-
पाण्डित्यभृद् गाण्डिवम् ॥ ९३ ॥

दुर्योधनः —

"द्वौ बाहू चरणौ च तस्य नरव-
त्तुल्यं मुखाक्ष्यादिकं
नद्धं सप्तभिरेव धातुभिरहो
गात्रं सगोत्रं जनैः ।

यद्यप्येवमथापि केन सदसि
प्रस्तौषि पार्थं मुधा :
राधेयस्य पुरः करिष्यति स किं
क्रोधाज्ज्वलन्नर्जुनः ?" ॥ ९४ ॥

कृष्णः—

"पाञ्चालीवरणोत्सवे रणविधू-
ताखण्डले खाण्डवे
कुहनाकिरातवपुषि
त्वद्घोषयात्रान्तरे ।
उग्रे गोग्रहसङ्गरे च विदित-
स्थामा स भीमानुजो
नूनं न श्रुतिगोचरोऽद्य भवतो
येनेदृशं भाषसे ॥ ९५ ॥

युक्तं यत्तु युधिष्ठिरे विनिकृते
कृष्णावमाने च य-
द्यच्चारण्यनिवासने यदपि ख-
ल्वज्ञातवासश्रमे ।
यच्चास्त्रेषु समार्जितेष्वविकलं
यच्च प्रसन्ने हरे
क्रुद्धे यच्च धनञ्जये तदधुना
कर्मैव निर्मास्यति ॥ ९६ ॥

ग्रामाणामपि पञ्चकं दिशसि चे-
 देतावतैवात्मनो
तृप्तिं क्वापि विधित्सवः शमपरा
 वाञ्छन्ति सन्धाममी ।
दत्वा पित्र्यमुपार्जितं तदधुना
 राज्यार्धमेभ्यो भवा-
नास्तामत्र सुखी न चेदपि भवे-
 न्निःकौरवं क्ष्मातलम्" ॥ ९७॥

सुयोधनः—

"वाचोयुक्त्यैव राज्यं नहि तव सुहृदां
 पैतृकं स्याद्यदेते
कुण्डाः पाण्डौ विमोहाद्विहितमुनिवधे
 षण्डभावं प्रपन्ने ।
जाता धर्मानिलाखण्डलसुरभिषजा-
 मात्मजास्तुल्यदार-
स्वीकारोद्यत्कलङ्का विपिनभुवममी
 यान्तु शान्तावलेपाः" ॥ ९८ ॥

कृष्णः—

"स्वर्यातेऽथ विचित्रवीर्यनृपतौ
 व्यासोऽम्बिकायामसुं
नूनं ते जनयाम्बभूव जनकं
 जातोऽसि तद्गोलकात् ।

राज्यार्हः स कथं तथापि बहुधा
किं कत्थसे त्वं मुधा
वक्तुं तत्र समर्थमुत्तरमलं
भैमी गदा केवलम् " ॥ ९९ ॥

सुयोधनः--

"वक्तव्यं भृत्यवर्गैर्ननु नियतमिदं
भर्तृवाक्यं यथोक्तं
दृप्तोऽसौ बह्वबद्धं भयमुपजनयन्
भाषते यत्स्वयं माम् ।
प्रत्यक्षं क्ष्मापतीनां तदयमुपगतो
बध्यतां बध्यतां वा
शक्ताश्चेदेत्य पार्था निजकुनयपथा-
देशिकं मोचयन्तु " ॥ १०० ॥

इत्युक्त्वैव सभातलाद्विचलिते
दुश्शासनाद्यैस्समं
बन्धुं बन्धहरं हरिं त्रिजगतां
दुर्योधने व्यापृते ।
बुध्वा वृत्तमिदं सभां सरभसं
प्राप्तोऽवदत् सात्यकिः
"ही ही ! साधु चिकीर्षिताऽद्यकुरुभि-
र्वर्या सपर्या हरेः ॥ १०१ ॥

निरुद्यमाः पाण्डुसुता मुरारौ
बद्धे भवन्तीति नितान्तमूढाः ।
त्रिभिः सह स्थैर्धृतराष्ट्रसूनु-
र्बन्धुं सतामिच्छति बन्धुमेनम् ॥ १०२ ॥

तेनोत्तुङ्गशिखाकलापकपिल-
श्वेलाञ्चलेनानलो
बध्येताथ सदागतेरगतिता
दीयेन पाशैर्दृढैः ।
किञ्चासंख्यतिमिङ्गिलो जलनिधि-
र्लङ्घ्येत दोष्णा सुखं
कृष्णोऽयं गततृष्णयोगिनिवह-
ध्येयो निबध्येत चेत् " ॥ १०३ ॥

तदनु ते सञ्चाहितमहीपतिवीरपार्ष्णिग्राहाः कर्णदुर्योधनदुश्शासनशकुनिहतकाः "पुरा किल बाल्यचापल्ये गोपालिकया न बद्धोऽसौ "भीमयमलार्जुनभङ्गहेतुः सञ्जातः ?"? इति पुनरपि तथा कर्तुकामा इव नतबन्धहारिणं बलिबन्धकारिणममुं भुवनैकबन्धुं निजापनयैरेव केवलमबन्धूकृतं बन्धुमिच्छन्तो भृशं खला विशृंखला अपि करतलसज्जीकृतरज्जुशृंखलाः सज्जनसदसि लज्जाभयविवर्जिताः दुष्कृतरसात् धिक्कृतधृतराष्ट्रविदुरबहुतरनिवारणवाक्याः, हीहीरवहाहारवमुखर-

मुखेषु सकलसामाजिकेष्वर्योतिथितेष्वासीनेषु निर्गन्तुकामेषु निरोद्धुकामेषु पार्श्ववर्तिनि दीप्तकोपे सात्यकौ सात्वतर्षभभ्रूविभ्रमनिवारिते, निजाक्षौहिणीयुते सभां विविशति धृतायुधवर्मणि कृतवर्मणि, स्पृष्टमात्रे त्विष्टरश्रवसि दुष्टानमून् पिष्टपेषं पिनष्मीति भीष्मे कृतनिश्चये, शपामि शस्त्रं गृह्णामि वेति विकृपे सकृपे संभ्रान्ते च द्रोणाचार्ये, सभाजनार्हाननवेक्ष्य सभाजनमध्ये समापतितुं प्रारभन्त ।

तदानीं च चिदानन्दमयः पुराणपुरुषः परिषन्निषण्णसकलजननयननवामृतायमानवितायमानकलायमानहरकलेवरलक्ष्मीः सभान्तराले सुमेरुशृङ्गतुङ्गमहासनमध्यमध्यासीनो मृगाधिराजः शृगालानिव दुराशयानमून् निरादरदृष्ट्या निरीक्षमाणः तमोमयानामेषां निवारणायेव निजवदनेन्दुकन्दलितसुन्दरतरदन्तपङ्क्तिकान्तिसन्ततमयचन्द्रिकाप्रकरं पुरतः प्रसारयन् "अयि भो सुयोधन ! किमहं निस्सहाय इति बन्धुकामोऽसि" इति वदन् किमप्युच्चैरुज्जहास । तदनु—

तावद्देवस्य देहाज्झगिति पटुतटिद्-
कोटिवत्ताडिताक्षः
संहारोन्निद्ररुद्रस्फुटनिटिलशिखि-
ज्वालजालप्रकाशः ।

कल्पान्तक्रूरसूर्योत्कररकिरणसमा-
हारघोरः समन्ता-
दारुन्धानस्सभां तां निरपतदतुलः
कोऽपि तेजस्समूहः ॥ १०४ ॥

ततश्च सर्वतो विसृमरदावपावकज्वालामालोद्गारिमार-तकशैलशैलिमुद्वहतः सकलपपञ्चकुक्षिंभरेर्विश्वम्भरस्य तत्क्षणमेव तत्तदवयवेभ्यः पङ्कजसम्भवशङ्करसंक्रन्दनादिवृन्दारकवृन्ददनुजमनुजभुजङ्गमप्रमुखा निःशेषविश्ववासिनोऽप्यहमहमिकया समुत्पेतुः ।

तत्र चास्य फालदेशाच्चतुस्सनकसप्तर्षिनवयोगिशतवैखानसषष्टिसहस्रवालखिल्याद्यसंख्यमुनिमण्डलपरिमण्डलितः कुण्डिकाक्षसूत्रमण्डितभुजदण्डो दृश्यते स्म पुण्डरीकभवः ।

ततोऽपि च स्थविष्ठक्लिष्ठद्राघिष्ठह्रसिष्ठकुब्जादिविकृतशरीरभूतप्रेतवेतालपूतनाडाकिनीकूश्माण्डाष्टभैरवप्रमुखप्रचुरप्रमथयूथसहस्रपरिवेष्टितः, अष्टमूर्तिरपि सप्ताकृतिः, संहारकतोऽपि रक्षां धारयन् , कठोरकुठारशूलशाली महादेवस्तस्य हृदयादुदयाञ्चकार ।

बाहुयुगलादपि वह्निकरप्रज्वलितवज्रज्वालाजालदीपितं, दण्डधरभुजकाण्डताण्डवितचण्डदण्डस्फुटितस्फुलिङ्गोत्करोत्कीर्णं, यादसांपतिदम्पातानुवर्तिविविधजलचरकुलाकुलं,

-गन्धवाहागमनसन्धायमानसुगन्धप्रबन्धान्धीकृतदिगन्तरं, यक्षा-धिपानुगतलक्षाधिकयक्षगुह्यकप्रशोभितं, षट्षष्टिकोटिसङ्ख्य-सुराङ्गनाजनानुनिस्सृतं, निस्सीमगन्धर्वकिन्नरविद्याधरौघाविद्यो-तितं, त्रयस्त्रिंशत्कोटिप्रधाननिर्जरकुलं निर्जगाम।

वदनाद्दहनो, नासाया नासत्यदस्रौ, विलोचनाद्विरो-चनश्च, मनसोऽपि घनसारजंबालसम्बाधशीतलीकृतमिव भुव-नान्तरालमारचयन्नशेषतारकाराजिनीराजितो रराज तारका-राजः।

तदनन्तरञ्च प्रतिक्षणभक्षितनरमांसप्रक्षरितक्षतजरसो-क्षितरूक्षतराकृतिराक्षसकुलावेष्टितपार्श्वाः श्रीयमानाभि-माना दानवदैतेयभटा लक्षकोटिशो लक्ष्यन्ते स्म।

तत्क्षणञ्च चक्षुरुत्क्षारितक्ष्वेलानलोष्मभीष्मतरभोगमण्डलोद्गीर्ण-फूत्कारमयोल्काभिघातोत्क्षोभितसकललोकं सवासुकि सशेषमप्यशेषमु-रसर्पं दर्पोद्धतं सर्पकुलम्। अविषश्च तस्य विश्वतोमुखाच्चत्वारः सशिरस्थ-हस्तिपातितत्तदायुधसहस्राभिन्याप्तसप्तार्णवमध्यवर्तिसमस्तधात्रीपतिचक्र-समावृताः ससाम्बप्रद्युम्नगदसारणानिरुद्धा अनिरुद्धाः सर्व एव वृष्णि-वीरभटाः।

दक्षिणबाहोरक्षतवीर्यः 'तिष्ठतिष्ठेति' निष्ठुरवादी कृष्टगाण्डिवः पाण्डववीरः प्रोदतिष्ठत्॥

चालतहलमुखानिर्भिन्नामिव भ्रमितमुसलविक्षुण्णामिव भुवनं करि-ष्यन् भीमकोपो वामबाहोः कामपालोऽप्यालोक्यत।

पृष्ठतश्चोदतिष्ठन् युधिष्ठिरादयश्चत्वारः। बाहवश्च तस्य ह्यग्रतरोद्घूर्णशङ्खचक्रगदाशार्ङ्गनन्दकादिविविधायुधज्वाला-मालालेलिह्यमानदिक्तटा अनेकशः प्रादुरासन्।

सुपर्णश्च तप्तसुवर्णसवर्णस्वपर्णविघूर्णनोदीर्णसामघोष-घोषिताश आकाशे प्रकाशाश्चक्रे।

तदानीं च भक्तिभारावनम्राः पाण्डवादयः सर्वे देहिनः सकलजगदात्मानं परमात्मानं शक्त्यनुसारेण तत्र सिषेविरे।

ततश्च निबद्धाञ्जलिसमस्तमुनिस्तोमप्रस्तुतातिचित्रतर-स्तोत्रनिनदैः मधुरतरलास्यसेवाप्रवृत्तसुरतरुणीचरणरञ्जित-मणिमञ्जीरमञ्जुशिञ्जितानुबन्धिगन्धर्वकिन्नरवीणावेणुगीतता-रुक्रणादैः वृन्दारकवृन्दाहतदुन्दुभिपटहसम्भूतगम्भीरध्वनिभि-श्चतुर्मुखनतमुखीसमुन्मिषितब्रह्मघोषैः आनन्दताण्डवोद्दण्ड-खण्डपरशुकराहिण्डिडिण्डिमचण्डरवामीलितताण्डमृदङ्गरवानुगतच-ण्डिकागानध्वनिः रुद्रानुचरभूतप्रेतवेतालपालिकाहर्षवल्गनोद्धूत "कहकाहिका" रवानुमिलिताष्टभैरवाट्टहासैः भगवत्कराश्रित-पाञ्चजन्यस्वयमुदीरितधीरनिनदैरपि न केवलं तत्पुरं जनपदो वा भुवनमशेषमपि घोषमयासीत्।

तत्तेजोनष्टदृष्टिप्रसरमत इतः
कर्णदुर्योधनाद्या
भूपाः प्रागेव पेतुः सतु कृपविदुर
द्रोणभीष्मादिलोकः।

*दिष्ट्या वीरजनप्रियं परिणतं
तावद्रणं दारुणं
निर्यान्तु प्रबलैर्बलैः सह मही-
पाला गृहीतायुधाः ।
पश्यन्त्वत्र पृथाभुवां प्रमाथित-
प्रत्यर्थिशस्त्रोत्करा-
नस्त्रानुग्रतरानुभावभयदान्
दर्वीकरप्रक्रमान् ॥ १११ ॥

यत् सत्यव्रतभङ्गभीरुमनसा
यत्नेन मन्दीकृतं
यद्विस्तब्धमपीहितं शमवता
शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसम्भृतं नृपवधूकेशा-
म्बराकर्ष
क्रोधज्योतिरहो ! महत् कुरुवने
यौधिष्ठिरं जृम्भताम् ॥ ११२ ॥

*अस्य श्लोकस्य पाठान्तरं दृश्यते । यथा

दिष्ट्या चिरात्परिणतं रणमेव ताव-
न्निर्यान्तु भीमिपतयः सह वाहिनीभिः ।
पश्यन्तु तत्र चरितानि पृथासुताना-
मित्यूचिवान् मधुरिपुर्निरगात्सभायाः ॥

अथ रथवरमश्वैः सैन्यमुख्यैश्चतुर्भि-
र्धृतधुरमधिरूढः क्षत्तुरालम्ब्य हस्तम् ।
अनुगतमखिलं तद्राजकं वारयित्वा
परिमितपरिवारः पार्थपार्श्वं प्रपेदे ॥ ११३ ॥

नारायणाभिधमहीसुरवर्यवक्त्र-
जैवातृकामृतझरीनिकरायमाणम् ।
हृद्यं प्रबन्धमिदमद्य समाप्तमुद्यद्
गद्यं समस्तमनवद्यविराजिपद्यम् ॥ ११४ ॥

दूतवाक्यसमाख्यानं
निबन्धनमिदं महत् ।
सम्मतं कृत्स्नविदुषां
जीयते जगतीतले ॥ ११५ ॥

शुभं भूयात् ।

अथ रथवरमश्वैः सैन्यमुख्यैश्चतुर्भि-
र्धृतधुरमधिरूढः क्षत्तुरालम्ब्य हस्तम् ।
अनुगतमखिलं तद्राजकं वारयित्वा
परिमितपरिवारः पार्थपार्श्वं प्रपेदे ॥ ११३ ॥

नारायणाभिधमहीसुरवर्यवक्त्र-
जैवातृकामृतझरीनिकरायमाणम् ।
हृद्यं प्रबन्धमिदमद्य समाप्तमुद्यद्
गद्यं समस्तमनवद्यविराजिपद्यम् ॥ ११४ ॥

दूतवाक्यसमाख्यानं
निबन्धनमिदं महत् ।
सम्मतं कृत्स्नविदुषां
जीयते जगतीतले ॥ ११५ ॥

शुभं भूयात् ।